# श्री कोल्लापूर महालक्ष्मी शतकम्

कवि: पण्ढरीनाथाचार्यः गलगली

क्षीराब्धिं भगवान् यदर्थममरैः सार्धं ममन्थाऽसुरैः
क्षाराब्धिं च यदर्थमेव कपिभिः सम्यग् बबन्ध प्रभुः ॥
यत्प्रीत्यर्थमपार सागरजले शेते च पीतांबरः
सा मे स्वामि हरेर्भवेत् प्रियतमा क्षेमाय मे माधवी ॥ (१)

दृष्टा कष्टविनाशिनी चरणयोः स्पृष्टाऽप्यनिष्टापहा
तुष्टाऽभिष्टुति मात्रतोऽपि च सरीसर्ष्टीष्टकामान्नृणाम् ॥
इष्टा वा जपमन्त्रवन्दन तपोनुष्ठान सुष्ठुकर्मैः
येष्टे ब्रह्मपदं प्रपा तु मपि तां प्रेष्ठां च लक्ष्मीं भजे ॥ (२)

पद्मं सद्म च पद्मभूस्तव सुतो हस्ते सदाऽस्तेऽम्बुजम्
पद्माक्षी वरपद्मपाणिररुणश्रीपद्मरागोऽधरः ।
पद्माङ्घ्रिः किल पद्मनाभमहिषी पद्मप्रिया पद्मिनी
हृत्पद्मे मम सन्निधाच्छ्रव कमले वं पदमवर्णोज्वला ॥ (३)

मन्दाक्षानत एव मन्दरगिरिर्मन्दान्यसन्दानतः
मन्दरद्रुरथेन्दुराननरुचा सौन्दर्यमन्दीकृतः ॥
माधुर्येण गिरां सुधाऽपि च मुधा रूपेण रम्भादयः
पद्मे सिन्धुभवा गुणैस्तव गुणीभूताः प्रयाता दिवम् ॥ (४)

या कल्ये भजतां हि भक्तिलहरीकुल्यायितान्तर्हृदां
मूल्यातीत फलप्रदा सुरशिरोमौल्यात्तमालाञ्चिता ।।
कल्याणाभरणायिता निजजनावल्यार्ति हन्त्री सदा
कल्याणं कलयेच्च कल्पलतिका कोल्लापुरोल्लोसिनी (५)

यमुनाजलनीलवर्णिनी
यम–नानार्तिविनाशकारिणी ।।
सुमनो वरदायिनी हरेः
कमना स्याद् वरवर्णिनी मुदे ।। (६)

हृत्संकल्पित कल्पनेन हि नृणां कल्पद्रुकल्पा भुवि ।
कामस्तोमसुपूरणैः कुवलये या कामधेनु र्नृणाम् ।।
कल्याणी खलु कोटि कोटि जनताकल्याणकारित्वत:
कोल्लापूरगतेन्दिरा हि कुशलं कल्लोलयत्वन्वहम् ।। (७)

पालयन्ती जगत्सर्वं
लालयन्ती जडानपि
लालयन्ती श्रियं मय्यु–
न्मीलयेत्सुदृशं रमा ।।
महाराष्ट्र भुवां पुंसां महाभाग्यमहो परम्
पितामह महादेब सेव्यमत्र स्थितं महः ।। (८)

सदेच्छन्ती क्षेमं सकल वसुधामण्डल भुवां
प्रयच्छन्ती मोक्षं विषयनिरपेक्षं च भजताम् ॥
नियच्छन्ती लोकान्निज–रमण–संकल्प सदृशं
ममागच्छत्वन्त: करणमबला काऽपि सबला ॥ (९)

पुरा वेधा: कोल्लापुर–पुर–समुल्लासि–कमलां
सुरद्रु–स्वर्धेन्विष्टद–मणि–मुखान् सिन्धुज–मणीन्
तुलारूढांश्चक्रे दिवमुपगता लाघवयुता:
स्थिता श्रीरत्रेष्ट–प्रदमहिमतो गौरवभरात् ॥ (१०)

चन्द्र: सुन्दरतां सुधा मधुरतां रम्भादिरम्भोरव:
चञ्चच्चारिम किञ्च कौस्तुभमणि: कान्तिं च चिन्तामणि:
अश्वश्चञ्चलतां च मन्थरगतिं चैरावतो दातृतां
लब्ध्वा कल्पतरुश्च ते गुणकणान् प्राप्तादरा: सोदरा: ॥ (११)

देवी श्री कमला करस्थकमला शेवन्तिका कोमला
दैत्यारेर्महिला सदैव कमलावासा वपु:श्यामला
दृष्ट्वा दृक्कमले विकास्य विमले गर्तें स्खलन्तं भवे
विष्णो: पत्कमलं निरस्य शमलं मां प्रापयेत्स्वं शिशम् (१२)

रक्ष: संहृदधोक्षजस्य विलसद्वक्षोऽच्छमञ्जूषिका–
मुक्तां मोक्ष–कपाटिकापसरणी–कुञ्चीं विपञ्ची–स्वनाम् ॥
मृत्यु–ग्रस्त–समस्त–भक्त–जनता–संजीविनीं पावनीं
कोल्लापूर–समुल्लसद्–हरि–वधूं वन्दे विपल्लोपिनीम् ॥ (१३)